# श्रीहनुमच्चरित्रवाटिका








प्रकाशन
केशव प्रकाशन
ग्राम—मुरारपट्टी, पोस्ट—लालगंज
ज़िला—बलिया ( उ० प्र० )

प्रकाशक :—
श्रीकृष्ण कुमार तिवारी
22. हरदत्तराय चमड़िया रोड,
हबड़ा—711101 ( प० बं० )



मूल्य : १००'०० रुपया

प्रथम संस्करण
१००० प्रतियाँ

मुद्रक :—
विजय प्रेस,
सरसौली–भोजूबीर,
वाराणसी।

# प्राक्कथनम्

सम्पूर्णसूत्राण्यथ चालवन्तं स्वं दासवत्किन्तु निदर्शयन्तम्।
पंगुं पुनर्मां पथि सारयन्तम् नतोऽस्मि वातात्मजमाञ्जनेयम् ॥

## महानुभावाः

दशमीपरीक्षोत्तीर्णस्य विद्यार्थिनो ज्ञानं कियत् ? परं हनुमत्कृपेव भवतां पुरतः प्रस्तुताऽस्ति श्रीहनुमच्चरित्रवाटिकेयम् । अस्याश्च रचयिता मत्समः संस्कृतानभिज्ञः । अहो आश्चर्यम् । युक्तमेवोक्तमेवम् ।

मूकं करोति वाचालं पंगुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥

वाटिकायामपि मया स्वसंस्कृतानभिज्ञता बहुधा प्रकटिता । अनपेक्षितरीत्या स्मृताबुदाराञ्छब्दान्प्रसङ्गाँश्च स्मारं-स्मारं मन्मनः सम्प्रत्यपि आनन्दानुभूत्या परिपूर्णं भवति तां व्यक्तीकर्तुमसमर्थोऽस्मि । कथं वाक्यं स्यात्; कथं काव्यं स्यात्; कथमन्यानि काव्याङ्गानि स्युः; कथं लेखनं भवति नाजानां स्वल्पमपि । वाटिकायाः सम्पर्कात एव यत्किञ्चिल्लिखितुं शक्तोऽस्मि । प्राक्कथनमपि कथं स्यान्नैवेदं जानामि । तथाप्यावश्यकतामनुभवता मया कथञ्चित्प्रयासः क्रियते । तत्रादौ काव्यरचनाकालः काव्यरचनास्थलानि च निर्दिश्यन्ते ।

सम्पूर्णवाटिका ५।११।८० ई० तारिकातः १७।१२।८३ ई० तारिकां यावद् विरचिता । श्रीहनुमन्महिम्नस्तोत्रम् प्रथमकुञ्जसप्तकञ्च श्री श्री १००८ श्रीमुनीश्वरानन्द श्रीमहाराज [ खपडिया बाबा ] स्वामिनः 'सङ्कीर्तन धाम' नाम्न्याश्रमे [ मण्डलं मैनपुरी; पत्रालय उसनीधा उ० प्र० ] विरचितम् । तत्पश्चात् कालिकालकुञ्जो द्वापरकुञ्जोऽयोध्याकुञ्जश्चेति कुञ्जत्रयं श्री स्वामिन एव 'गङ्गाकुटी' [ मण्डलं-वाराणसी; पत्रालय-छितौनी उ० प्र० ] नाम्न्याश्रमे विरचितम् । अन्ते रामाश्वमेध-कुञ्जः श्रीस्वामिन् एव 'सङ्कीर्तन नगर' नाम्न्याश्रमे [ मण्डलं-बलिया; पत्रालय श्रीपालपुर ] विरचितः ।

एवं मया सम्पूर्णा वाटिका श्रीहनुमत्कृपाप्रसादतो लिखिता । स्वसंस्कृतान भिज्ञतया सदैवाहमैच्छं कश्चिद्विद्वान् वाटिकाया अवलोकनं कुर्यादिति । कांश्चिद्विदुषोऽहं अप्रार्थयं परं ते पृष्ठत्रिशतीं दृष्ट्वौदासीन्यं दर्शयित्वा मौना अभवन् । केचित्सप्ताष्टौ वा

श्लोकान् दृष्ट्वैव व्यरमन् प्राशसञ्च। कार्यसिद्धये भृशं चिन्तितोऽभवम् । किन्तु यो मया वाटिकामलेखयत्स स्वयमेव सर्वे प्रबन्धे सतर्क आसीत् । यदाऽन्तिमकुञ्जस्य सर्गद्वयं शेषमासीत् श्री० पं० शिवदयालु द्विवेदी [ मानस कोकिलः, व्याकरणाचार्यः ] महोदयेन सह मे साक्षात्कारोऽभवत्। स महानुभावः अहं पुस्तकं द्रक्ष्यामीत्याश्वासनमयच्छत् । वाटिकां प्रेक्ष्य भृशं प्रसन्नोऽसौ प्रशस्तिपत्रकमयच्छत् । परं पुस्तकस्य बृहत्त्वादपशब्दस्फीत्या ( यथा संयुक्ताक्षरादौ लघ्वक्षरम् ) च ग्रन्थस्यान्यगुणकर्षणाच्च सम्यक्तया संशोधनं नाभवत्। तत्पश्चात् पं० श्री० रामचन्द्र पाण्डेय [ व्याकरणाचार्यः ] महाभागेनापि वाटिकावलोकनं कृतं तथा क्वचित्क्वचित्संशोधनमपि कृतं यदुचितमेव। अन्ते 'पद्मश्री' पं० श्री रघुनाथ शर्मा ( डी० लिट्; काशी हिन्दूविश्वविद्यालयस्य तथा सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य मानदः; वेदान्त विभागस्य भूतपूर्वोऽध्यक्षः; वर्तमानः सम्मानितः प्राध्यापकः सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य वाराणस्याम्; राष्ट्रपतिसम्मानितः, प्राप्तविश्वसंस्कृतभारतीपुरस्कारमहाभागेन तृतीयं तथा चान्तिमं संशोधनं कृतम्। तद् दृष्ट्वाऽहं परमः प्रसन्नोऽभवम्। जरसा सुपक्वो धनुराकृतिरयं वृद्धपुरुषो विनोपनेत्राभ्यामपि विलिखति पठति च। बहुसङ्ख्येषु क्षेत्रसम्बन्धिष्वभियोगेषु मग्नोऽपि सरस्वत्याः, सेवायामपि दत्तचित्तः । न्यायालये स्थितोऽप्यवसरे प्राप्ते सरस्वत्याः सेवां करोति। अत्यन्तसूक्ष्मदृष्टिरयं महाभागः सूक्ष्मानपशब्दानपि काकवत्सुनिरीक्षते। धन्याऽस्य प्रतिभा । मत्संशोधनमेव चेयमित्यादिष्टेन मया प्रायः सर्वमेव संशोधनं चितम् । परन्तु क्वचित्क्वचिद् भग्नप्रक्रमदोषपरिहारलोभतो वा स्थलान्तरवर्णितकथाविरोधपरिहारलोभतोवाऽनुप्रासाद्यलङ्कारभङ्गदोषपरिहारलोभतोवाऽन्यहनुमच्चरितवर्णितविरोधपरिहारलोभतो वा, पूर्व एव वाऽन्य एव वेषत्परिवर्तितो वा पाठो मया गृहीतः। अन्ते श्रीपण्डितप्रवररघुनाथशर्मणाऽपि प्रस्तावनाऽथ च चित्रबन्धानां सम्मतिश्च प्रदत्ता।

प्रारम्भे यदा श्रीहनुमच्चरित्रवाटिकां लिखितुमचिन्तयं बहवः सज्जनास्तदवगम्य भृशं प्राशंसन्। तेषां प्रशसा वाटिकाकर्तुर्मत्कृते अतीवोत्साहवर्धनाऽभवत् । याचनया विनैव वा सकृदेव याचनयैव वा ये महानुभावाः सञ्चिकालेखनीमसीत्यादीनि वस्तूनि परमया श्रद्धया मह्यमयच्छन्। तैरपि ममोत्साहवर्धनं कार्यं कृतम् । ममाज्ञातां न हसद्भिर्यैर्देववाणीविज्ञैर्भृशं प्रसन्नतया वैचारिकं साहाय्यं कृतं पुस्तकानि च दत्तानि विविधानि तेषामुपकृतोस्मि । तेषां पुस्तकानां लेखकानामृषीणां चाप्यहमृणी। चित्रबन्धानां चित्राणि सुष्ठ्वालेख्य श्रीदिनेशत्रिपाठिना मत्कार्ये साहाय्यं कृतम् । श्रीहनुमदिच्छयैव प्राप्तैनेतेषां साहाय्येन वाटिका सुपल्लविता सुपुष्पिता च प्राभवत्। श्रीहनुमत्प्रसादोऽपि श्री श्री १००८ श्री स्वामिमुनीश्वरानन्द ( खपडिया बाबा ) स्वामिनां साकाशादेव लब्धो नान्यथा।

इति बहूनां साहाय्यं लब्ध्वा वाटिका निर्मिताऽस्ति । अस्यां नैव किमपि मेऽज्ञानिनः । स्वप्रशंसां श्रुत्वाऽहङ्कारपूरितेन मया विज्ञानामपि परामर्शं न मत्वा स्वजडत्वाच्च श्रीहनुमत्कृतां प्रेरणां न विज्ञाय चापशब्दप्रयुक्तयः कृता भवेयुरवश्यमेव । अतः सर्वे दोषा मेऽज्ञानिन एव । विज्ञास्तु मद्दोषान्परिहृत्य श्रीहनुमत्कृपयैव लालितां पालितां संवर्धिताञ्च श्रीहनुमच्चरित्रवाटिकां पठेयुरिति ।

स्वदोषानांकृते तु मुहुर्मुहुः प्रार्थयामि—

'क्षमध्वं हे विज्ञा मम चपलतामज्ञसुलभाम् ।'

भवदीयः

हरिहरानन्दः

आश्रम सङ्कीर्तन नगर

पत्रालय–~~[illegible]~~ चान्दपुर (बैरिया)

जनपद–बलिया उ० प्र०

गुरुपूर्णिमा

दि० २।७।८५ ई०



## 'पद्मश्री' पण्डितप्रवराणां श्रीमतां रघुनाथशर्मं

## महाभागानां सम्मतिः

[ भूतपूर्वं वेदान्तविभागाध्यक्षः स० सं० विश्वविद्यालयस्य, राष्ट्रपतिपुरस्कृतः, प्राप्तश्विसंस्कृतभारतीपुरस्कारः ]

अथ श्रीहनुमच्चरित्रवाटिकाविमर्शः प्रस्तूयते। इयं खलु वाटिका। अस्याः पद्यप्रसूनानि भ्रामं भ्रामं सञ्चिन्वताऽशेषं विचिता मया। अस्यां वाटिकायां बहूनि कुञ्जानि सन्ति। तेषु यत्र-तत्र बहवो बन्धा अद्भुता अदृष्टपूर्वाश्च निबद्धाः। अस्यां वाटिकायां प्रतिकुञ्जं फलितेषु पद्येषु फलानां लिप्सया दिदृक्षया च हनुमान् कपीश्वरो भ्रमति। अस्याञ्चादृष्टपूर्वाणि अश्रुतपूर्वाणि च हनुमच्चरित्राणि उपनिबद्धानि यानि हनुमत्प्रसादाद् वक्त्रा लब्धानि मन्ये प्रातिभानि। अस्याः कर्ता श्री स्वामी हरिहरानन्दः सिद्धतापसः। अस्या भाषा शब्दाश्च सरलाः। अस्यां हनुमतोऽमानित्वमदम्भित्वं सेवाधर्मः शिवत्वञ्च सम्यक् प्रतिपादितम्। अस्याश्च लेखनेन कवेः प्राक्तनी सहजा-शक्तिः इदानींतनी च देवताप्रसादलब्धजन्मा शक्तिः प्रतीयते। अस्यां वाटिकायां चिरन्तनाः साम्प्रतिकाश्च भावाः शब्दाश्च उपनिबद्धाः प्रयुक्ताश्च दृश्यन्ते व्यवहारा अपि तथैव द्विविधाः। अस्याञ्च मातृभक्तिः, पितृभक्तिः स्वामि-भक्तिर्देवभक्तिश्च ससाधना निर्दिष्टाः। अयं कविः कस्मिंश्चिदांग्लविद्यालये जीव-विज्ञानच्छात्र आसीदिति एतद्ग्रन्थदर्शनतः प्रतीयते। अयं कविः श्रीखपड़ियाबाबा नाम्नः सिद्धस्य सेवकः तत्प्रसादलब्धवाग्विभूतिरिति यथाज्ञानं निगद्य विरमामि।

दिनांक ४।२।८५

रघुनाथ शर्मा
मातृसदन सेमरी
पत्रालय–छाता
जनपद–बलिया (उ० प्र०)



## श्रीमत्पण्डितप्रवर रघुनाथशर्म महोदयानां बन्धविषये सम्मतिः

१. इन्द्रवज्रबन्धः—बालहनुमत्कर्तृकरविकर्मकग्रासावसरे इयं कवेरुक्तिः। मृत्योर्गृहीता इव हनुमत्कर्तृकग्रासक्रियाभीतस्य राहोर्वाचो वागिन्द्रियाणि हे इन्द्र हनुमद्रूपात्, मृत्योश्च पाहि इति मुहुर्वदन्त्यः एकस्यापि वागिन्द्रियस्य वदनक्रियाभेदाद् बहुत्वोपचारः। भयं व्याञ्जन्–प्राकट्यन्त। इन्द्रं प्रति। इन्द्रस्तु तच्छ्रुत्वा नैव रुष्टो बभूव किन्तु भीतो बभूव मामपि रविवद् ग्रसिष्यतीति मत्वा। अहो इति आश्चर्ये। तथापि हनुमन्तं प्रति वज्रमक्षिपदिति। [ पृष्ठाङ्क—५० ]

२. ताराबन्धः—अस्यार्थः अस्मत्पुर्या ईशः–राजा रघुपतेः प्रीतिं तु स्मरति एवेति शेषः। एवं तस्य अस्मत्पुरीशस्य रामकार्ये भृशमत्यन्तं रुचिरपि च। असौ अस्मत्पुरीशः–परम्-केवलम्-अरत इव-रामे प्रीतिशून्य इव बहिर्दृश्यते। वस्तुतस्तु अरत्या रामविषययाऽप्रीत्या बहिः प्रतीयमानया नावरुद्धः–रामस्य भक्तिपूर्वकं ध्यानपूजनादिकं कर्तुं नावरुद्धः—नावरोधपूर्वकं निवारितः। स तु अस्मत्पुरीशो रामचन्द्रस्य चरणकमलभृङ्गोऽस्ति इति। [ पृष्ठाङ्क—१५४ ]

३. दीपकबन्धः—अस्यार्थः—हे वायोः पुत्र, कृच्छ्रे अस्माकं समागतेऽपि विरक्ततां—औदासीन्यं किं भजसि वद। भवान् वाचा–स्ववाण्याऽस्माकं धैर्यदयाकरो धैर्यस्य दयायाश्च कारकः, हे धृतियुतान् नः अस्मान् प्रति स्फूर्तिसौख्यप्रद। हे हनुमन् त्वयि दूरं गते सति वयं कृपणाः दीना भूत्वा तिष्ठामः। हिते परहितकरणे त्वं वायोस्तुल्यबलः, अतः हे आनन्द निजबलं विस्तारय—अस्माकं हितकरणाय इति शेषः। [ पृष्ठाङ्क—१९० ]

४. शार्ङ्गधनुर्बन्धः—अत्र पद्ये प्रथमपादे यद्यपि 'सुष्ठ्वभ्राजन्त तत्र' इत्यस्य रकारसंयोगे पूर्वस्य गुरुत्वं सम्भाव्यते तथापि रकारसंयोगे न गुरुत्वमिति कविसम्प्रदायमनुसृत्य एव बन्धः समर्थनीयः। [ पृष्ठाङ्क—२३४ ]

५. कमलबन्धः—अयं बन्धो यथा कृतस्तथैव साधुः। [ पृष्ठाङ्क—२३६]

६. नन्दकखड्गबन्धः—अत्र पद्ये 'गिरा' इत्यस्य रसनया इत्यर्थः। यथानिबद्धं तथा साधु। [ पृष्ठाङ्क—२३७ ]

७. कौमोदकीगदाबन्धः—अत्र प्रथमः पादः साधुः। द्वितीयपादे तदित्यनेन अलब्ध्वा इत्यस्य कर्तृमनः परामृश्यते। तृतीयपादे तत्पदेन कामं समर्चदित्यस्य कर्तृमनः परामृश्यते। किञ्च-मतिं-तमधमं काममपि विमथ्नदिति मनो विशेषणम्। भ्रमति इत्यस्यापि कर्ता मन एव। एवं विचारेकृते एव बन्धोऽपि यथाऽवस्थितः साधुः। [ पृष्ठाङ्क—२३८ ]

८. **पाञ्चजन्यशङ्खबन्धः**—अस्मिन्पद्ये—निगच्छ इत्यस्य नितरां गच्छेत्यर्थः। ते मां मा विस्मर इति सम्बन्धः। मे नमः स्मृतिमपि रघुपतिं ज्ञापयेति सम्बन्धः। एवं पूर्णोऽयं बन्धः साधुः। [ पृष्ठाङ्क—२४० ]

९. **सुदर्शनचक्रबन्धः**—अयं बन्धो यथाऽवस्थितः सर्वात्मना साधुः। [ पृष्ठाङ्क—२४१ ]

१०. **उर्मिकाबन्धः**—सर्वोऽपि बन्धः साधुः। [ पृष्ठाङ्क—२६० ]

११. **श्रद्धाप्रसूनबन्धः**—अत्र पद्ये यद्यपि-निजश्रद्धाया इत्यत्र - सफलश्रम-समूह इत्यत्र च रकार संयोगे पूर्वस्य गुरुत्वं सम्भाव्यते तथापि रकारसंयोगे न गुरुत्व-मिति कविसम्प्रदायमनुसृत्य एव बन्धः समर्थनीयः। [ पृष्ठाङ्क—३७३ ]

१२. **छत्रोपानद्बन्धः**—अत्र बन्धे शिवदेवता इत्यस्य स्थाने शिवदैवतो इत्युक्तौ न बन्धेकोऽपि दोषः। [ पृष्ठाङ्क—४५४ ]

१३. **हनुमदीश्वरबन्धः**—अदो लिङ्गम् । समासे उपसर्जनस्यापि लिङ्गस्य-क्र्यस्तदर्थे इत्यादाविव परामर्शोऽदः शब्देन । तदेव पूजाकालानन्तरमेव चिरन्तनीं दिव्यतां वभार वै इत्यव्ययं प्रसिद्धौ। अथ द्वितीयपद्यस्य व्याख्या—असौ यो लिङ्ग-विशेषोहनूमदीश्वर इति ख्यातः उमापतेर्लिङ्गमिति स रामेणापि नुतः स्तुतः। राम-नुत्यन्तरं पुनरव्यक्तिमप्राकट्यमायातः। शिवस्तु यस्तत्र देशे विग्रहान्तरेण सन्निहित आसीत् स स्वगन्तव्यं कैलासादिकं पुनरैत् यत आगतस्तत्र गत इति। [पृष्ठाङ्क -५००]

१४ **वक्षोविदारकहनूमद्बन्धः**—इदं पद्यं यथास्थितं साध्वेव। [ पृष्ठाङ्क—५५९ ]

१५. **मुरजबन्धः**—इदं पद्यमपि यथास्थितं साधु । यदि क्लेशमनुभवता सूक्ष्मेक्षिकया विचार्यते। [ पृष्ठाङ्क—६७० ]

१६ **हेमपद्मबन्धः**—इदं पद्यं यथास्थितं साधु। [ पृष्ठाङ्क—७३३ ]

१७. **श्रीरामदूतमन्दिरबन्ध**.—अत्र बद्धं पद्यद्वयमपि यथावस्थितं साधु। [ पृष्ठाङ्क—८२१ ]

नात्रातीव प्रकर्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चितानां प्रकाशते ॥



॥ श्री हरिः ॥

# ॥ श्रीहनुमच्चरित्रवाटिकाप्रशस्तिः ॥

सुरवरौ श्रितशान्तिसुखप्रदौ
हरिहरौ विदितौ श्रुतिसम्मतौ ।
मुनिवरो नररूपधरो हरिः
हरिहरो हनुमानपरो हरः ॥ १ ॥

पवनपुत्रचरित्रसुवाटिका
मृदुपदैः कुसुमैः सुमनोहरा ।
विविधकाव्यविधाभिरलङ्कृता
[श्री] खपड़िया मुनिपुण्यफलान्विता ॥ २ ॥

ऋषिकुलाश्रमशान्तिसुधेधिता
विविधवृत्तविहङ्गमकूजिता ।
गुणगणालिसमूहनिषेविता
विबुधवन्द्यबुधैरभिनन्दिता ॥ ३ ॥

प्रचरिते तिमिरेऽद्भुतपूषणा
सुरगिरो सुरसा गतदूषणा
मुनिकृताऽखिललोकहितेक्षणा
जयति भारत-भारति-भूषणा ॥ ४ ॥

पवनपुत्रचरित्रसुरद्रुमा
विनय-शील-विवेक-बलोद्यमा
विविधबन्ध-विचित्र-विहङ्गमा
हरिहरस्य मुनेः कृतिरुत्तमा ॥ ५ ॥

शुभ्राभिः सरसोक्तिभिर्विरचिता सारस्वती सारिका
किं वाऽचिन्त्यविधेर्विधाननिपुणा श्रीशेशयोर्नाटिका ।
श्रेयो भूतिविधित्सया कृतिमतां मार्गार्गलोद्घाटिका
सेवाधर्मविधायिका हनुमतः शीलाश्रिता वाटिका ॥ ६ ॥

सुरभारतीसुधास्वादसरस-सारस्वत जनों !

सर्वथा संस्कृतवाङ्मय पराङ्मुख जनसमुदाय के समक्ष संस्कृत-साहित्यके सृजन का प्रयास सत्साहसका परिचायक होते हुए किसी भव्य नव्य युग का सन्देशवाहक भी है। प्रवेशिका परीक्षोत्तीर्ण विज्ञान छात्र के द्वारा तीन हजार सुललित पद्यों तथा शब्दानुशासनसम्मत सारगर्भित गद्यों में काव्य रचना 'किमाश्चर्यमतः परम्' वाली सूक्तिको चरितार्थ करती सी लगती हैं। यह कृति हमें अपनी आर्ष परम्परा की चमत्कृतिपूर्ण दिव्यता पर विश्वस्त बनाती हैं। साथ ही अपने मन्त्रद्रष्टाओं एवं सत्साहित्यके स्रष्टाओं की तपः पूत मानसिकता के प्रति असंदिग्ध तथा श्रद्धावनत होने के लिए विवश भी बनाती है।

अखिल भारतीय महामण्डल के प्रवर्त्तक त्यागतपोनिष्ठ वीतराग धर्मप्राण अनन्तश्री विभूषित स्वामी श्री मुनीश्वरानन्द जी महाराज ( श्री खपड़िया बाबा ) के श्रीचरणकमलाश्रित श्री हरिहरानन्दजी द्वारा विरचित 'श्रीहनुमच्चरित्रवाटिका' सत्साहित्यकी पावन परम्परा में एक अद्भुत अभिनव सुरभित कुसुमावलि का 'सत्यं शिवं सुन्दरम्' सा संगुंफन करती सी दीखती है। इसमें व्यास, भास, बाल्मीकि, श्रीहर्ष, माघ, कालिदास भवभूति एवं भारवि के साथ ही दण्डी बाणभट्ट तथा अम्बिकादत्त व्यास की लोकोत्तर प्रतिभा के साथ हमारे कवि की प्रतिभा प्रतिस्पर्धिनी बनी बैठी है। शैली की प्रौढ़ता तथा काव्यगत निगूढ़ताओं को देखते हुए कहना पड़ता है :—

"न प्रभा तरलं ज्योतिरुदेति वसुधातलात्।"

हमारे प्रस्तुत महाकाव्य के नायक श्री आञ्जनेय हनुमान हैं। देश का दुर्भाग्य है कि कलुषित वासना विषाक्त उपन्यासों, कहानियों तथा पत्र-पत्रिकाओं से जनमानसकी मधुर मन्दाकिनी किस प्रकार प्रदूषित हो रही हैं। इस ओर न तो सरकार का ध्यान जाता रहा है, न जन समुदाय का। सुरा सुन्दरी सिनेजगत् सम्मिलित हो 'विछली पर धक्का' देने के लिए समुद्यत है। ऐसी भयावह स्थिति में दुर्दान्त दानवदर्पदलन, संकटमोचन श्री महावीर हनुमानजी का चरित्र ही वैय्यक्तिक पारिवारिक सामाजिक तथा राष्ट्रीय जीवन में पुनर्नवजीवन संचार करने में सक्षम हो सकता है।

प्रस्तुत काव्य की भाषा बड़ी ही सरल एवं सुबोध है। संस्कृत भाषा का सामान्य ज्ञान रखने वाला व्यक्ति भी सुगमता से समझ सकता है। कथा प्रवाह 'पावन पर्वत वेद पुराना' से ही बहता हुआ आ मिला है। ये सभी कथायें जन मानस के साथ घुली मिली सी हैं। आञ्जनेय की लीलाओं का प्रदर्शन स्वाभाविक सुमधुर एवं अतीव मुग्धकारी है। सभी प्रसंग नवीन उद्भावनाओं एवं उक्ति भंगिमाओं के साथ पाठकों के अन्तर्मन में उद्घोष करते से लगते हैं—

'तदेव रूपं रमणीयतायाः क्षणे क्षणे यन्नवतामुपैति'

इस वाटिका में कवि की सहृदयता, तीखी अनुभूति, विनोदप्रियता तथा विलक्षण तार्किकता प्रकट हो रही है। पढ़ते-पढ़ते मनमयूर नाच उठता है। मानो सुधा-सरिता का पावन प्रवाह बह रहा है।

श्रीरामराज्य के प्रवर्त्तक एवं सतत संरक्षक श्रीमहावीर हनुमानजी को लक्ष्य कर रचा गया यह काव्य अवश्य ही राष्ट्र के कर्णधारों के लिये प्रेरणाप्रद सिद्ध होगा ऐसा हमारा अखण्ड विश्वास है।

इस प्रकार हमारी यह 'श्रीहनुमच्चरित्रवाटिका' संस्कृत भाषा शिक्षण के लिए स्वाध्यायियों को सुलभ साधन प्रस्तुत करती है। इतना ही नहीं साहित्य ज्ञान के सर्वोच्च शिखर पर समासीन सुज्ञ विज्ञ विद्वद्दिग्गज जनों के लिए विविध बन्धों के माध्यम से बौद्धिक व्यायाम का भी अवसर देती है। 'भनिति सरल कीरति विमल सोइ आदरहिं सुजान' इस साहित्य की कसौटी पर यह अभिनव सरस महाकाव्य कितना शुद्ध सिद्ध होता है इसे सुधीजन स्वयं ही समीक्षित निरीक्षित एवं परीक्षित कर स्वान्तः सन्तोष सम्पादन करें।

सभी शिक्षण संस्थानों, शिक्षक शिक्षिकाओं, छात्र छात्राओं, साहित्य प्रेमियों, कथा वाचकों, व्याख्याताओं तथा राष्ट्र के कर्णधारों को इस आर्ष काव्य के प्रचार एवं प्रसार में सहयोग देकर अपने को सरस्वती का सच्चा सपूत तथा भारतीय राष्ट्र के स्वर्णिम प्रभात का अग्रदूत सिद्ध करना है।

गोष्पदीकृतवारीशं मशकीकृतराक्षसम् ।
रामायणमहामालरत्नं वन्देऽनिलात्मजम् ॥
अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥

चैत्र शुक्ला दशमी
सं० २०४२
३१।३।८५

श्रीसीतारामदासानुदासः
शिवदयालु द्विवेदी
'मानस कोकिलः'
व्याकरणाचार्यः
सिवान (बिहार)

# अनुबन्ध-निरूपण

१ प्रयोजन—शिवभक्तों के लिये शिवपुराणादि कई ग्रन्थ पढ़ने लायक है, कृष्ण भक्तोंके लिये श्रीमद्भागवतादि कई ग्रन्थ पढने लायक हैं। इसी प्रकार रामायण, विष्णुपुराण, गणेशपुराण, देवीभागवत, कालिका पुराण, नृसिंहपुराण इत्यादि बहुतसे ग्रन्थ अपने अपने आराध्य देवोंको भली प्रकार स्मरण कराने वाले मिलते हैं, परन्तु श्री हनुमद्भक्तोंके लिये ऐसा कोई भी स्वतन्त्र ग्रन्थ नहीं है। कई भाषाओं में कई हनुमच्चरित लिखे हुए मिलते हैं परन्तु उनमें रामायणसे प्राप्त हनुमद् वृत्तोंका संकलनमात्र है तथा कुछ तदनुसारी अपने भावों का मिश्रण बस ! हनुमद्भक्तों की संख्या अल्प नहीं है; परन्तु वर्तमान समय में हनुमानजी की भली प्रकार वरीयता प्रतिपादन करनेवाला एक भी चरित ग्रन्थ नहीं है।

सत्यादियुगत्रयी में मनुष्यों का बलवीर्य पर्याप्त था। उस समय कठिन साधनों से बहुतों ने भगवान् के दर्शन प्राप्त किये। भगवद्विभूतियाँ भी पृथ्वीपर आकर प्रत्यक्ष दर्शनों से भक्तोंको तृप्त करतीं थीं। उससे प्रसंगवश एकाधिक भगवद्विभूतियोंके सम्मेलन भी होते थे। इसलिये दास भावसे भावित हनुमानजी-के ईश्वरत्व प्रतिपादक चरित की कोई आवश्यकता नहीं थी। दासत्व का निर्वाह करनेकी इच्छावाले हनुमानजीने भी उसे प्रकट नही करने दिया। लेकिन अब जब कि द्वापरके निकटतम कलिके ५००० वर्ष बीतने पर मानव पर्याप्त क्षीणवीर्य हो गये हैं भगवद्विभूतियाँ भी अव्यक्त ही रहकर भक्तों पर अनुग्रह करतीं हैं। क्योंकि कलिपापदूषित भूमिपर अवतरण नहीं चाहतीं है। अतः एकाधिक भगवद्विभूतियोंके सम्मेलन भी नहीं हो रहे हैं। लेकिन हनुमानजीकी पृथ्वीपर पूर्ववत् ही स्थिति है। शिवभक्तों पर रामभक्तों पर हमुमद्भक्तों पर वे ही अनुग्रह करते हैं इसलिये वर्तमान समयमें हनुमानजीका स्पष्टतासे ईश्वरत्व प्रकट करने वाले चरितकी अत्यन्त आवश्यकता है। जिससे असंख्य हनुमद्भक्त अपने इष्टदेव का भली प्रकार गरिमासे युक्त चरितका आस्वादन करके परम तृप्ति का अनुभव करें।

२ विषय—कुछ लोग कहते हैं हनुमानजी शिवजीके पुत्र हैं। कुछ लोग कहते हैं कि हनुमानजी एकादशवें रुद्रके अवतार हैं। कुछ लोग कहते हैं हनुमान रामके दास हैं। यथार्थ दृष्टिसे हनुमानजी कौन थे ? उनका रामसेवन कैसा था ? क्या उन्होंने किसी खास कामनासे रामसेवा की थी ? इत्यादि प्रश्नों का सम्यक् उत्तर रामायणसे प्राप्त हनुमद्वृत्तखण्डों द्वारा प्राप्त नहीं हो सकता है। यदि होता है तो कुछ मन्थनसे ही। वह मन्थन किस प्रकारका है ? उस मन्थनका सार

क्या है ? यही तो श्रीहनुमच्चरित्रवाटिकामें वर्णन किया गया है। इसमें सिद्ध किया गया है कि हनुमानजी न तो शिवजी के पुत्र थे, न ग्यारहवें रुद्रके अवतार थे, न रामके दास थे। वह स्वयं शिवही हैं अन्य कुछ नहीं। उनकी की हुई लीलाके कारण ही वे शिव पुत्रवत्, शिवावतारवत् तथा रामदासवत् मालूम पड़े। लेकिन वह आभासमात्र ही है। इसलिये उनके चरित के माध्यम से उनका चरित्र (स्व-भाव) ही मैंने इसमें वर्णन किया। अतः श्री हनुमचरित्रवाटिका, यह नाम अन्वर्थक ही है।

३ सम्बन्ध—जब मैं वाटिका लेखनमें प्रवृत्त हुआ इससे पहले किसी प्रकारकी कोई छोटी भी पुस्तक मैंने लिखी नहीं थी न सम्यक् रूपसे संस्कृत व्याकरण पढ़ा था, परन्तु श्री हनुमानजी ने ही इस पुण्यमार्ग पर अपनी कृपा से जबरदस्ती मुझे चलाया। कई शब्दप्रयोग, जिनका मैंने कभी अध्ययन नहीं किया न कभी देखे न सुने, लेकिन अकस्मात् लेखनी द्वारा लिखे गये बादमें पता लगा कि वे सही है। उसी प्रकार नये कथा भागोंके बिषयमें मैंने जरा भी विचार-मंथन नहीं किया है उनके युक्ततम स्थानों पर हनुमत्कृपा से वे स्वयं ही मेरे चित्त से निसृत हुये उस समय मैंने भी अत्यन्त हर्षका अनुभव किया था।

इससे स्पष्ट है कि परमकृपालु हनुमानजी नें ही इस प्रकार कृपा की है। न तो मुझमें साधना है, न विवेक। कुछ भी तो नहीं है। श्री हनुमानजीकी कृपासे ही जो कुछ हुआ सो आपके प्रत्यक्षही है, वैसे तो औपचारिकतादर्शनार्थ बड़े बड़े पण्डित भी अपनी असमर्थता व्यक्त करते हैं। परन्तु न तो मैं पण्डित हूँ न किसी प्रकारका वाग्विशेष मेरे पास है, श्री हनुमानजी की कृपा से ही मेरा मार्ग तय हुआ है इसमें सन्देह नहीं है। ग्रन्थमें स्थान-स्थानपर मैंने अपनी असमर्थता व्यक्त की है तथा हनुमत्कृपाबल का स्मरण किया लेकिन अभी भी मैं अतृप्त ही हूँ। वाटिका का प्रत्येक शब्द कृपासे ही निसृत हुआ है। अतः कृपाका सम्पूर्ण वर्णन किया जाय तो वाटिकासे भी बड़ा ग्रन्थ होगा।

४ अधिकारी—जिनके इष्टदेव श्री हनुमानजी हैं वे ही इस ग्रन्थके उत्तम अधिकारी हैं। जिज्ञासु महानुभाव भी सभी अधिकारी ही हैं। रामके भक्त तथा शिव भक्त भी अधिकारी हैं ही। क्योंकि कलियुग में उन दोनों के भक्तों के योग क्षेम की व्यवस्था भी हनुमानजी को ही करनी है। श्री हनुमानजीका चरित पवित्र है तथा पढ़नेवालों को पवित्र करता है। अतः सभी श्रेयस्कांक्षी लोग इसके अधिकारी कहे जा सकते हैं। 'मंगल मूरति मारुत नन्दन' प्रसिद्ध ही है। उनका चरित भी वैसा ही है। अतः विभिन्न प्रकार से पढ़नेवाले आर्त तथा अर्थार्थी कोटि के सज्जन भी अपने ढंग के अधिकारी ही कहे जा सकते हैं।

—लेखक



वाटिका के रचयिता प्राप्तहनुमत्कृपाप्रसाद
श्री १००८ ब्रह्मचारी श्री हरिहरानन्द जी महाराज



परमपितुः परिपूर्णपरमात्मनः सर्वेश्वरस्य भगवतः शिवस्य कृपापरवशो भूत्वाऽस्मत्प्रभृतिजीवानां हितायैव सेवकभावं स्वीकृत्य हनुमद्रूपेण लीलासु प्रवृत्तिस्तथा च तस्य गूढातिगूढाभ्यो लीलाभ्योऽनभिज्ञानामल्पज्ञजीवानां तस्मिन्विषये स्वमत्यनुसाराणां भिन्न-भिन्नविचाराणां प्रकथनं स्वाभाविकमपि वस्तुस्थितेरसङ्गतमेव। नैतदस्वीकार्यम्। नवनवोन्मेषस्यास्य मधुरतयाऽऽश्चर्यकारितया च साकमयमपि विचित्रसंयोगोऽनेन सह संयुक्तो भवति यन्मत्सदृशः संस्कृतानभिज्ञ इमं संस्कृतभाषायां छन्दोबद्धरचनायां सुविस्तृतवाटिकारूपेण च प्रस्तौति। वस्तुतस्तु परमात्मनस्तस्यैव महत्या अहैतुक्या असीमानुकम्पायाः प्रेरणयैव सम्भवितुमशक्नोदिदम्। नैवान्यथा। अपरञ्च कामं भवत्वमृतमतीवोत्तमं, स्वादु, सरसं गुणवच्चावश्यमेव दूषितत्वं भजते, यदि तत्सन्धारकपात्रे दोषो विद्यते। श्रीहनुमच्चरित्रवाटिकाया मूलप्रत्यां त्रिचतुर्वारं संशोधितायां सत्यामपि बहुसङ्ख्यास्त्रुटयः सन्त्यस्याम्। कमन्यं दोषमूलं ब्रूयाम ? संशोधकान्, मुद्रणालयं, प्रूफप्रेक्षकमन्यांश्च दूषितान्वक्तुं कोऽधिकारो मे ? अनभिज्ञत्वाद्दोषनिधिस्त्वहं स्वयम्। एभिस्त्वतीवोपकृतोऽहम्। यथाप्येमास्त्रुटय आयाता आयाता एव। आशासे, विज्ञमहानुभावाः केवलाञ्जनेयकृपामूलकगुणास्वादनपरा भविष्यन्ति। अन्येषां दोषमूलक-लघुप्रस्तरिकोपम-त्रुटिप्रेक्षणपरा न सन्तः स्वकीयां महतीं गुणग्राहितां विस्तीर्य सहानुभूतिं प्रदर्शयिष्यन्ति। अग्रिमे संस्करणे त्रुटीरपाकर्तुं यथासम्भवं प्रयासः सम्भविष्यति।

महाशिवरात्रिपर्वणि
दि० २।३।१९९२ ई०

हरिहरानन्दः
आश्रम-संकीर्तन-नगरम्
पत्रालयः–चान्दपुरम् (कौशिक)
जनपदः–बलिया (द्वाबा) उत्तरप्रदेशः

# विषयानुक्रमणी

श्रीगणेशाय नमः

# श्रीहनुमच्चरित्रवाटिका

## बालकुञ्जः

### अथ प्रथमः सर्गः

शिख०—

अथादौ श्रीवाणीगणपतिपदेभ्यः प्रणमनम्
स्मृतौ तौ देवेशैं र्विधिहरिहरैश्चाऽपि बहुधा ।
अवापुर्माङ्गल्यं दधिनकुलदूर्वाजलघट-
सवत्सागोमीनादय इह तयोरेव सकलाः ॥ १ ॥

शार्दू०—

यो हन्ति प्रथितं सुदुस्तरमघं सन्मङ्गले पूजितः
यो वै शम्भुसुतः प्रभुश्च तुलसी यन्मूर्ध्नि नो राजते ।
सिद्धोऽभूत्सुतरां पुनर्जगति यो रामस्य नाम्ना स्मृतः
सन्तुष्येत् स दशास्यदर्पदलनः सिन्दूरलिप्तो मयि ॥ २ ॥

( अनुबन्ध निरूपण के अन्तर्गत प्रयोजन के विषयों में जो कहा गया; उसकी पूर्ति अत्यावश्यक है। अतः श्रीहनुमच्चरित्रवाटिका का उपक्रम करने के लिये मैं ) सर्वप्रथम श्री सरस्वतीजी तथा श्रीगणेशजी के चरणों में प्रणाम ( करता हूँ )। उनका स्मरण ब्रह्माविष्णुमहेशादि देवेश्वरों ने भी बहुत बार किया है। दही नेवला, दूर्वा, जलपूर्णघट, सवत्सा गौमाता, मछली इत्यादि वस्तुओं ने भी उन्हीं से मंगलत्व प्राप्त किया है ॥ १ ॥

अत्यन्त कष्ट से भोगा जानेवाला पाप ( भी ) मंगल के लिये पूजित होने पर जो नष्ट कर देते हैं; जो श्रीशिवजी के पुत्र कहे जाते हैं; जो प्रभु हैं; जिनपर तुलसी नहीं चढ़ती हैं; जो 'रामनाम' से सिद्ध हुए ऐसा कहा जाता है; वे रावण का अहंकार नष्ट करनेवाले श्रीगणेशजी मुझ पर प्रसन्न हों, जिनका श्रीविग्रह सिन्दूर-लेपित है॥ ( अधोरेखित स्थानों पर क्रमशः 'मंगलवार' को 'तुलसीदास जिनके दास ही रहना चाहते हैं, मूर्द्धस्थ नहीं होना चाहते हैं 'श्रीहनुमान्जी' ये शब्द रखने पर श्रीहनुमान्जी परक भी अर्थ हो जाता है ॥ २ ॥

शार्दू०—

हृष्टास्या परमोपयाति विदिता श्रीरामगाथासु या
बुद्धेर्जाड्यमपाकरोति कृपया या देवकार्ये रता।
या रागेष्वथ रागिणीषु सुतरां सिद्धा च काव्यादिषु
सा मां पातु यशस्करी स्मितमुखी वाक्सिद्धिदा देवता ॥ ३ ॥

स्रग्धरा—

गौरीशं ब्रह्मविष्णू दिनकरगणनाथौ जगन्मातरश्च
रुद्रानेकादशाथो द्विषडदितिसुतानष्टमूर्तिन्वसूंश्च।
विश्वेदेवांश्च साध्यान्सह पवनगणानश्विनौ चोष्मपांश्च
नत्वा याचे शुभं शं सकलसुरगणान् वाटिका सर्जनादौ ॥ ४ ॥

शार्दू०—

सप्तर्षींश्च मुनीश्वरानृषिवरान् सर्वान्प्रजापालकान्
सिद्धान् किन्नरयक्षगुह्यकगणान्रक्षांसि वै चारणान्।
वेतालनथ भैरवान्भवगणान्प्रेतांश्च भूतानहम्
नत्वेच्छामि सदैव सन्तु मुदिताः कुर्वन्तु नो मङ्गलम् ॥ ५ ॥

---

( 'रमन्ते योगिनो यस्मिन्स रामः' के अनुसार ) निखिल भगवच्चरितों में योगदान देने के लिये जो प्रसन्न होकर पास आती हैं; जो अपनी कृपा से ही बुद्धि की जड़ता को दूर करने वाली हैं; जो देवकार्यों में रत रहने वाली हैं; राग-रागिनी तथा काव्यादि विषयों में सिद्धहस्ता हैं; वह यशःप्रदात्री हँसमुखी वाक्सिद्धि देनेवाली देवता 'श्रीसरस्वतीजी' मेरी रक्षा करें। ( अधोरेखित स्थानों पर क्रमशः 'रामकथा में' तथा 'श्रीहनुमान्जी' रखने पर ) श्रीहनुमान्जी परक भी अर्थ हो जाता है ॥ ३ ॥

वाटिका निर्माण से पहले ब्रह्मा, विष्णु, महेश, सूर्य, गणेश, देवी, ग्यारह रुद्रों, बारह आदित्यों, आठ वसुओं, विश्वदेवों, साध्यगणों, उनचास वायुवों, दो अश्विनी कुमारों तथा पितरों को नमस्कार करके मैं ( सबसे ) कुशल मंगल की याचना करता हूँ ॥ ४ ॥

सप्तर्षियों, मुनिगणों, ऋषिगणों, प्रजापतियों, सिद्धों, किन्नरों, यक्षों, गुह्यकों, राक्षसों, चारणों, वेतालों, भैरवादि शिवगणों, प्रेतों तथा भूतों को नमस्कार करके इच्छा करता हूँ कि सदा प्रसन्न रहें तथा हम सबका मंगल करें ॥ ५ ॥

शार्दू०—

ऋग्वेदादिचतुष्टयं पुरुषजं चायुर्धनुश्चादयः
अङ्गोपाङ्गगणैर्युताः श्रुतिगणाः शास्त्राणि सर्वाणि च।
अन्ये ये स्मृतयस्तथौपनिषदा ग्रन्थाः पुराणादयः
गृह्णन्तु प्रणतिं भवन्तु सुखदाः कुर्वन्तु नो मङ्गलम् ॥ ६ ॥

शार्दू०—

सूर्येन्दू बुधमङ्गलौ गुरुभृगू सौरिश्च छायाग्रहौ
पृथ्वी वार्यनिलोऽनलोऽम्बरमथो भूतानि दिग्दिग्गजाः।
सन्ध्ये रात्र्यहनी नदीनदगणाः सर्वाणि तीर्थानि च
गृह्णन्तु प्रणतिं भवन्तु सुखदाः कुर्वन्तु नो मङ्गलम् ॥ ७ ॥

मन्दाक्रा०—

वन्दे रुद्रं ह्यकुरुत पुरा यो विनष्टं स्मरं तम्
वन्दे स्थाणुं जनकृतमघं लीलया विस्मरन्तम्।
वन्दे शम्भुं नयनसुखदं स्वेष्टदेवं स्मरन्तम्
वन्दे प्रीत्या पशुपतिमहं तच्चरित्रं स्मरन् तम् ॥ ८ ॥

---

(परात्पर) पुरुष (के निःश्वास) से निःसृत चारों वेद, आयुर्वेद, धनुर्वेद आदि उपवेद तथा उनके अंग एवं उपांग (भूत विविध ग्रन्थ) सभी शास्त्र, स्मृतियाँ; उपनिषद् तथा पुराणादि ग्रन्थ मेरा प्रणाम ग्रहण करें। तथा हम सबके लिए मंगलमय हों ॥ ६ ॥

सूर्य, चन्द्र, बुध, मंगल, गुरु, शुक्र, शनि, राहु, केतु, पृथ्वी, जल, अग्नि, वायु, आकाश, दिशाएँ, दिग्गज, रात्रि, दिवस, सन्ध्याएँ, नदियाँ, नद तथा सभी तीर्थ मेरा प्रणाम स्वीकार करें तथा हम सबके लिये मंगलमय हों ॥ ७ ॥

प्राचीनकाल में जिन्होंने काम को जलाया उन श्रीरुद्रभगवान् को मैं प्रणाम करता हूँ। जो भक्तों के पाप को सहज में ही भूलने वाले हैं, उन 'स्थाणु' नामधारी श्रीशिव को मैं प्रणाम करता हूँ। अपने इष्ट (श्रीराम) का स्मरण करनेवाले नेत्रों के लिये आह्लाददायक श्रीशम्भु को मैं प्रणाम करता हूँ। उन्हीं के (विशद) चरितों का स्मरण करता हुआ मैं श्रीपशुपतिको श्रद्धा से प्रणाम करता हूँ ॥ ८ ॥

शार्दू०—

तादृक्कल्मषकृत्तमो नहि भवेत्कर्तुं क्षमः कल्मषम्
यादृक्पापमपाकरोति विदितं यन्नाम यं पण्डिताः ।
मर्यादापुरुषोत्तमेति सरलाः सम्बोधयन्त्युद्भटाः
यं रुद्रोऽपि सहाम्बया स्मरति वै रामाय तस्मै नमः ।। ९ ।।

स्रग्धरा—

शम्भुः कल्याणकारी रघुपतिपुरि यो वानराकारधारी
संगृह्णन्शंकरत्वं रघुपतिपदसेवासुलीनः समर्थः ।
सेवाधर्मस्वरूपं किमिति जगति नः पाठयँल्लीलयैव
वन्दे तं वायुपुत्रं कनकनिभतनुं श्रीहनूमन्तमीशम् ।। १० ।।

इन्द्र०—

वाल्मीकिमाद्यं कविपुङ्गवञ्च व्यासं यदुच्छिष्टमिदं जगच्च ।
अन्यान्कवीन्यैर्भगवच्चरित्रम् काव्ये निबद्धं प्रणमाम्यहं तान् ।।११।।

---

पापियों का शिरोमणि भी उतना पाप नहीं कर सकेगा जितना पाप उनके नाम से ही क्षणभर में दूर होता है ऐसी जिनकी प्रसिद्धि है, स्वभाव से सरल परन्तु विद्वत्ता में ऊपर ऐसे ( भक्त ) जिनको मर्यादापुरुषोत्तम ऐसा सम्बोधित करते हैं। तथा जिनका स्मरण माता ( पार्वती ) सहित श्रीरुद्र भी करते हैं उन ( परात्पर ) श्रीराम को मैं नमस्कार करता हूँ ॥ ९ ॥

सेवा धर्म का स्वरूप कैसा है, यह हम लोगों को पढ़ाने के लिये अपने शंकरत्वको समेट कर जिन जनकल्याणकारी श्रीशिवजीने अयोध्यापुरी में 'वानराकार देह' धारण किया और स्वयं समर्थ होकर भी श्रीराम की सेवा में दत्तचित्त हुए। शिवजी के उस सुनहरे रंग के स्वरूप श्रीहनुमान्‌जी को मैं प्रणाम करता हूँ, जो संसार में 'वायुपुत्र' नाम से ( भी ) प्रसिद्ध हैं ॥ १० ॥

आदि कवि वाल्मीकि मुनि को मैं नमस्कार करता हूँ। 'व्यासोच्छिष्टं जगत्सर्वं' ऐसी जिनकी प्रसिद्धि है उन व्यासजी को मैं नमस्कार करता हूँ। इसके उपरान्त अन्य कवियों को भी मैं नमस्कार करता हूँ जिन्होंने अपने काव्यों में भगवच्चरितों को निबद्ध किया है ॥ ११ ॥

शार्दू०—

पूतं यस्य वपुः सुतप्ततपसा यस्य स्वरूपे स्थितिः
वार्धक्यं प्रगतस्य यस्य नियमाः श्लाघ्या जनैस्तापसैः ।
व्यस्ते कर्मणि पद्मपत्रमिव वै तोयेषु यद्धारणा
वन्दे सर्वमुनीश्वरं खपड़ियाबाबाख्यमोजस्विनम् ॥ १२ ॥

शिख०—

ऋते ज्ञानान्मुक्तिर्न भवतु जने किन्तु सुतरां
कलौ भक्त्या सम्यक् परमपदलब्धिः प्रभवति ।
विभेदो ज्ञाने वा भगवति रतौ नो लवमपि
युगेऽस्मिन् सद्गत्यै सरलतमपन्थाः पदरतिः ॥ १३ ॥

शार्दू०—

अस्तौदाद्यजगद्गुरुः सुविदितं देवीरमेशेश्वरान्
श्रीचैतन्यमहाप्रभावविरला भक्तिः प्रसिद्धा जने ।
द्रष्टव्यो मधुसूदनो यतिवरः श्रीकृष्णभक्तः पुनः
सन्यस्तेऽप्यभवञ्जना जगति ते भक्तौ रताः पश्यत ॥ १४ ॥

---

उद्दीप्ततपस्या के कारण जिनका कलेवर ( भी ) पवित्र हुआ; ( अनवरत साधना के फलस्वरूप ) जिनकी अपने ( सत्-चित्-आनन्दमय ) स्वरूप में स्थिति हो चुकी है। विशेष वृद्धावस्था में भी जिनके नियम तपस्वियों द्वारा भी प्रशंसनीय रहे; जो कर्मों में व्यस्त रहते हुये भी जल के समान निकट सम्पर्क में आये कमल के पत्ते के समान उससे पृथक् ही रहे; उन सर्वश्री १००८ श्रीस्वामी मुनीश्वरानन्दजी महाराज ( खपड़िया बाबा ) को मैं प्रणाम करता हूँ ॥ १२ ॥

( सत्य त्रेता द्वापर में ) ज्ञान के बिना भक्ति ( भले ही ) न हो परन्तु कलियुग में भक्ति से ही भली-भाँति परमपद की प्राप्ति हो जाती है। ( वैसे तो ) ज्ञान और भक्ति में थोड़ा भी अन्तर नहीं है। लेकिन इस युग में परमपद की प्राप्ति के लिये भक्ति ही सरलतम उपाय है ॥ १३ ॥

श्रीमद् आद्य शंकराचार्यजी ने भी देवी विष्णु शंकर आदि देवताओं की स्तुति की है, यह सुप्रसिद्ध है। श्रीचैतन्य महाप्रभु की अत्यन्त उच्च भक्ति ( भी ) प्रसिद्ध है। श्रीमधुसूदन सरस्वती नामक संन्यासी श्रीकृष्णभक्त थे यह ( भी )

शिख०—

न किञ्चित्प्राप्तव्यं खलु जगति येषां भगवताम्
जनान्संगृह्णन्तस्तदपि विधिवद्भक्ति निरताः ।
हनूमान् व्यासो वै मदनदहनो नारदमुनिः
हरी रामः कृष्णो नरपरशुरामावपि च ते ।। १५ ।।

इन्द्र०—

माहात्म्यमित्थं जगति प्रवृद्धिं नीतं किमर्थं भगवद्भिरेवम् ।
भक्तेर्विशेषेण कलौ शृणुध्वम् तत्कारणं शास्त्रपुराणगीतम् ।।१६।।

शिख०—

कलावल्पायुष्यो भवति मनुजो हीशरचिता
इयं नीतिस्तस्मिन्न भवति बलं वीर्यमथवा ।
सुबद्धेर्हीनत्वं विषयविषवाञ्छैव भवति
न शक्तोऽसौ कर्तुं प्रभवति हितं साधनवरम् ।। १७ ।।

---

विचार करने लायक है। देखिये, ये सब संन्यासी होते हुए भी संसार में भगवद्भक्ति में रत हुए ।। १४ ।।

जिन भगवद्विभूतियों को इस संसार में किसीभी वस्तु की इच्छा नहीं थी वे भी लोकसंग्रह करते हुए विधिवद् भक्ति में ही रत होती ( हुई देखी गई ) हैं। जैसे श्रीहनुमान्जी, श्रीव्यासजी, श्रीशिवजी, श्रीनारदभगवान्, श्रीविष्णु, श्रीराम, श्रीकृष्ण, श्रीनरनारायण श्रीपरशुरामजी तथा और भी ।। १५ ।।

( अब यह प्रश्न उठता है कि ) भगवद्भक्ति का माहात्म्य इन भगवद्विभूतियों ने इस तरह क्यों बढ़ाया ? और खास रूप से कलियुग के लिये इसकी उपादेयता क्यों ? अब इसका शास्त्रपुराण सम्मत उत्तर सुनिये ।। १६ ।।

यह ईश्वररचित नीति ( के अनुसार ही ) है कि कलियुग में मनुष्य अल्पायु होता है। उसमें ( पर्याप्त ) बलवीर्य ( भी ) नहीं होता है। वह सुबुद्धिहीन होता है। तथा विषयरूपविष के लिये उसके मन में इच्छा रहती है। ( और इसी लिये ) वह हितकर साधनों को नहीं कर सकता है ।। १७ ।।

शिख०—

कथं तत्संशक्तिर्झटिति विलयं यातु विरतिः
तथा बन्धान्मुक्तिः परमपदलब्धिश्च सुलभाः ।
धृता ईशेनैवं बहुविधसुदेहा विमृशता
कुतो भक्ते मार्गो जगति च विनिर्देशित इति ॥ १८ ॥

पृथ्वी०—

अतो भगवदमृतोपमकथाः स्मरन्स्मारयन्
स्वजीवनमतःपरं जगति यापयेयं शमात् ।
महात्मसु सुकामना भवति चेति नैसर्गिकी
यया भवति सद्गतिश्च मनसः प्रसादोऽपि च ॥ १९ ॥

शिख०—

सुधीभि र्ह्येषैवाभवदपि सुमृष्टा शुभसृतिः
सृतिर्गम्येषैव स्वशुभगतये सुष्ठु कविना ।
विना हीशेच्छां नो प्रचलति तृणं सैव सबला
बलादस्यां सृत्यां परमकृपया चालयति माम् ॥ २० ॥

---

उसकी यह विषयासक्ति कैसे दूर हो? उसे भोगों से कैसे वैराग्य हो? बन्धों से छुटकारा तथा दुःखरहित पद की प्राप्ति कैसे हो? इस प्रकार विचार करने वाले ईश्वर ने ही (पृथ्वी पर) बहुत से अवतार धारण किये और (उनके द्वारा) मनुष्यों के लिये भक्ति का मार्ग दिखाया गया ॥ १८ ॥

इसीलिये (अबतक जैसे बीता, बीत गया लेकिन) इसके बाद मैं अपना जीवन भगवान् की अमृतोपम कथाओं का स्मरण करता तथा कराता हुआ बिताऊँ, इस तरह की शुभ इच्छा महान् आत्मावाले पुरुषों में स्वाभाविक हां (उत्पन्न) हो जाती है। जिससे मन भी प्रसन्न रहता है। तथा सद्गति भी हो जाती है ॥ १९ ॥

बहुत से सद्बुद्धि पुरुषों द्वारा स्वीकृत होने से वह शुभमार्ग अत्यन्त चमक उठा है। अच्छे कवियों के लिये अपनी शुभगति के लिये वही मार्ग अपनाने लायक है। जिस ईश्वरेच्छा के बिना तिनका भी नहीं हिलता है वही बलवती ईश्वरेच्छा परम कृपालु होकर मुझे (भी) इसी मार्ग पर बलपूर्वक चला रही है ॥ २० ॥

शार्दू०—

श्रीमन्तं लघुदानतः सुकृपणं प्राहुस्तु निष्किञ्चनम्
दातारं ब्रुवते जनाः सुविदितं तेनैव दानेन हि।
ईशेच्छा सुयशो ददाति खलु मह्यं सर्वथाऽज्ञानिने
अल्पज्ञे मयि सत्यपीति हनुमद्गाथा मया गीयते ॥ २१ ॥

शालि०—

नाहं विज्ञो देववाण्यां कदापि पृष्ट्वा पृष्ट्वा निर्मिता वाटिकेयम्।
प्रीत्या वन्दे हीश्वरेच्छां ययाऽस्मिन् पुण्ये कार्ये सर्वथा प्रेरितोऽस्मि ॥२२॥

शिख०—

न मे प्रौढा शैली न च पदसमायोजनमपि
अलंकाराभावो विगतरसता चापि कटुता।
सदोषायां कस्माद् भवति कवितायां मधुरता
क्षमध्वं हे विज्ञा मम चपलतामज्ञसुलभाम् ॥ २३ ॥

शिख०—

क्व मे मन्दा बुद्धिः क्व च मतिमतां सूक्ष्ममतयः
कवित्वं रस्यं क्व क्व मम रसहीनं प्रलपनम्।

---

यह प्रसिद्ध है कि जिस दान से समाज एक धनी को कृपण कहता है। उतने ही दान से दूसरे दरिद्र व्यक्ति को दानी कहता है। उसी प्रकार मुझ सर्वथा अज्ञानी को ईश्वरेच्छा सुयश दे रही है क्योंकि अल्पज्ञ होते हुए भी यह श्रीहनुमद्-गाथा मेरे द्वारा लिखी जा रही है ॥ २१ ॥

मैं संस्कृत भाषा का पण्डित नहीं हूँ। यह वाटिका मैंने पूँछ-पूँछ कर बनाई है। उस इश्वरेच्छा को मैं श्रद्धा से नमस्कार करता हूँ जिसने इस पुण्य कार्य में मुझे प्रेरित किया ॥ २२ ॥

न तो मेरी शैली प्रौढ़ है, न सम्यक् प्रकार से पद योजना हुई है, अलङ्कारों का अभाव भी है तथा रसविरहितता एवं कटुता ( आदि दोष ) हैं। सदोष कविता में मधुरता कहाँ से आ सकती है ? अतः हे विज्ञमहानुभाव ! आप मेरी इस अज्ञ-सुलभ चपलता के लिये मुझे क्षमा करें ॥ २३ ॥

कहाँ ( तो ) मेरी मन्द बुद्धि और कहाँ तीव्र बुद्धिमानों की बुद्धि। कहाँ तो नवरसों से सराबोर मधुर कवित्व और कहाँ मेरा रसहीन बकना; कहाँ तो

समृद्धं लीलाभिः क्व च पवनपुत्रस्य चरितम्
क्व चाहं निर्बुद्धिः पवनजकृपाऽऽप्तो व्यवसितः ॥ २४ ॥

इन्द्र०—

ब्रह्मा प्रसूतं सचराचरं यत् स्तुत्यं विगर्ह्यं गुणदोषयुक्तम् ।
उच्चं सुनीचं प्रणिपत्य तच्च वक्ष्ये हनूमच्चरितं शमस्तु ॥ २५ ॥

॥ इति श्रीहनुमच्चरित्रवाटिकायां बालकुञ्जे वन्दनात्मकः
प्रथमः सर्गः ॥ १ ॥



---

श्री हनुमानजी का गूढ़तम लीलाओं से समृद्ध चरित और कहाँ मैं—अल्पबुद्धि ! ( परन्तु ) श्रीहनुमान् जी की कृपा प्राप्ति से ( ही ) इसमें प्रवृत्त हुआ हूँ ॥ २४ ॥

( अन्त में ) ब्रह्माजी द्वारा निर्मित चर-अचर, प्रशंसनीय निन्दनीय, गुणयुक्त दोषयुक्त, उच्च-नीच सम्पूर्ण जगत् को प्रणाम करके अब श्रीहनुमान् जी का चरित कहूँगा ( जिसमे सभी का ) कल्याण हो ॥ २५ ॥

इस प्रकार श्रीहनुमच्चरित्रवाटिका के बालकुञ्ज के अन्तर्गत वन्दनात्मक
पहला सर्ग समाप्त हुआ ॥ १ ॥



२

# अथ द्वितीयः सर्गः

स्वागता–

स्वागतं शृणुत सज्जनवृन्दाः शंकरो हि जनशङ्कर एव ।
अम्बया सह गतो हरिधाम्नि वीक्षितुं हरिकृतं चरितञ्च ॥ १ ॥

इन्द्र०–

स्त्रीवत्स्वरूपं हरिणा सुचारु रक्षांसि सम्मोहयितुं धृतं तु ।
दृष्ट्वैव मुग्धानि जितान्यभूवन् शुश्राव पूर्वं शिव एवमेव ॥ २ ॥

वसन्त०–

प्रादुर्बभूव हृदये शशिशेखरस्य
कौतूहलं युवतिरूपनिरीक्षणार्थम् ।
गत्वा समाहितधियं स हरिं ददर्श
बद्धासनं च शिवमेव हृदि स्मरन्तम् ॥ ३ ॥

मालिनी–

भजति हरमजो वै विष्णुमीशश्च तद्वत्
प्रथितमिति पुराणेष्वस्ति तत्सत्यमेव ।

---

हे सज्जन वृन्दों ! आप का स्वागत है। (अब श्री हनुमान्‌जी का चरित) सुनिये। श्रीशंकर तो भक्तोंका कल्याण करने वाले ही ठहरे। (एक बार) वे माता पार्वती सहित वैकुण्ठ चले गये। उनके मन में श्रीहरि का किया हुआ चरित देखने की इच्छा थी ॥ १ ॥

राक्षसों को भली प्रकार मोहित करने के लिये श्रीहरि ने स्त्री के समान अपना रूप बनाया जो अत्यन्त सुन्दर था। (था तो वह छद्म रूप) लेकिन उसे देखते ही राक्षस मोहित तथा विजित हुये ऐसा ही श्रीशिवजी ने पहले सुना था ॥ २ ॥

(तभी से) शिवजी के हृदय में वह सुन्दर स्त्री रूप देखने के लिये कौतूहल उत्पन्न हुआ। (वैकुण्ठ में) पहुँचकर शिवजी ने देखा कि विष्णु समाधिस्थ हैं, उनका आसन बँधा हुआ है। वे शिव का ही स्मरण कर रहे थे॥ ३ ॥

विष्णु सदा शिव का स्मरण करते हैं तथा शिव सदा विष्णु का स्मरण करते हैं ऐसा जो पुराणों में प्रसिद्ध है वह सत्य ही है। शिव का हृदय विष्णु ही हैं

हृदयकमलईशस्यास्ति विष्णुर्मुरारिः
हरिहृदि भव आस्ते व्याप्य हृद्देशमीशः ॥ ४ ॥

इन्द्र०—
ज्ञात्वा मुरारिस्त्रिपुरारिवृत्तं द्रष्टुं भवं प्राभवदुत्थितः स्वात् ।
ध्यानाद्ददर्शातिसुदर्शनीयं गङ्गाधरं शम्भुमगाधसत्वम् ॥ ५ ॥

उपजा०—
परस्परं चाभवतां प्रसन्नौ दृष्ट्वा समर्थौ जगदीश्वरौ तौ ।
आस्तां स्थितौ तौ सुखतो यदा हि तदाऽवदच्छम्भुरुपेन्द्रमेवम् ॥ ६ ॥

उपजा०—
दृष्टा मया ते निखिलावताराः नापश्यमेकं सुमुखीस्वरूपम् ।
सुरान्सुधां पाययितुं धृतं यत् व्यामोहिता येन सुरारयश्च ॥ ७ ॥

इन्द्र०—
हालाहलाख्यं विषमब्धिजातं पीतं मया संसृतिरक्षणार्थम् ।
अस्वस्थ आसं विषपानतोऽहं नाशक्नवं द्रष्टुमतो मुरारे ॥ ८ ॥

---

जो मुर नाम के राक्षस को मारने वाले हैं तथा हरि का हृदय देश शिव द्वारा व्याप्त अर्थात् सम्पूरित है। ( वास्तव में भिन्न नहीं है ) ॥ ४ ॥

मुरशत्रु विष्णुने ( शिव तो यहीं उपस्थित हैं ) यह शिव का वृत्त जानकर शिवजी को देखने के लिये अपने ध्यान से निवृत्त होकर देखा ( तो ) गंगा को धारण करने वाले अनन्त सामर्थ्यवाले शिवजी ( सामने ही ) थे जो अत्यन्त सुन्दर आकार धारण किये थे ॥ ५ ॥

वे दोनों जगदीश्वर परस्पर देखकर बड़े ही प्रसन्न हुए। ( स्वागत एवं औपचारिक वार्ताओं के पश्चात् ) जब वे अपने अपने आसनों पर सुखपूर्वक बैठे थे उस समय शिवजी विष्णु से बोले ॥ ६ ॥

हे हरे ! आपने ( पृथ्वी का भार हरण करने के लिये जो ) जो अवतार धारण किये उन सब अवतारों का दर्शन मैंने किया है। परन्तु देवताओं को अमृत पिलाने के लिये जो आपने स्त्री-स्वरूप धारण किया था तथा जिससे देव शत्रु राक्षस मोहित हुये थे, उसे मैंने नहीं देखा। केवल वही रूप मैं नहीं देख पाया हूँ ॥ ७ ॥

समुद्र ( मन्थन के समय अमृत ) से ( पहले ) हालाहल नामक विष निकला

इन्द्र०—

द्रष्टुं तदिच्छामि तव स्वरूपं कौतूहलं मे हृदि हे रमेश ।
द्रष्टुं शुभं तद्वपुरागतोऽस्मि देवेश मां दर्शय तत्स्वरूपम् ॥ ९ ॥

उपजा०—

ईषत्स्मितास्यो हरिरब्रवीत्तम् हस्तेन हस्तं परिगृह्य शम्भोः ।
कृतस्त्वया कामजयः पुरारे स्त्रीदर्शने कस्तवहेतुरङ्ग ॥ १० ॥

उपजा०—

सौभाग्यमेतच्छिवसन्निभानां महाशयानां प्रियकर्म कर्तुम् ।
प्राप्तोऽवकाशोऽभयदेच्छसि त्वं तदेव रूपं हर दर्शयामि ॥ ११ ॥

उपजा०—

उक्त्वेति तत्रान्तरधीयताजः न तत्र तद्धाम न सेवकाश्च ।
आसन्स्मरारिः सगणः सहाम्बः पश्यन्दिशो विस्मयतो बभूव ॥ १२ ॥

---

था। संसार की रक्षा करने के लिये उसे मैं पी गया ( उसी विष पीड़ा के कारण ) अस्वस्थ होने से मैं ( आपका आगामी चरित जो हुआ ) उसे देख नहीं पाया ॥ ८ ॥

आप का वही स्वरूप देखने के लिये मेरे मन में उत्कट इच्छा उत्पन्न हुई है। और वही रूप देखने के लिये मैं यहाँ आ गया हूँ। अतः हे देवेश ! आप वही रूप मुझे दिखाइये ॥ ९ ॥

( सहज भाव से ) शिवजी का हाथ अपने हाथ में लेते हुए किञ्चित् मुस्कराकर विष्णु बोले; "हे त्रिपुर को जलाने वाले शिव, आपने तो काम पर विजय प्राप्त की है फिर स्त्री ( रूप ) के दर्शन में आप का क्या हेतु है ? ॥ १० ॥

लेकिन ( यह मेरा ) परम सौभाग्य है कि शिव जैसे महान् आशयवाले महात्मा का प्रिय कार्य करने का सुअवसर मुझे मिला। ( अस्तु ) हे अभय प्रदाता। आपके मन में जिस रूप को देखने की उत्कण्ठा है वही रूप मैं आपको दिखाता हूँ ॥ ११ ॥

इतना कहकर विष्णु भगवान् वहीं पर अन्तर्धान हो गये। सहसा विष्णु भगवान् के साथ ही वह दिव्य धाम तथा सेवकादि भी अदृश्य हो गये। वहाँ केवल माता पार्वती तथा ( कुछ ) गणों सहित शिव ही बचे रहे। जो कि आश्चर्य से ( विमुग्ध से ) होकर चारों तरफ देख रहे थे ॥ १२ ॥

मन्द्रा०—

दिव्योद्यानं कुसुमनिकरैर्मण्डितं दर्शनीयं
मन्दं मन्दं स्फुरणमनिलस्योत्तमं गन्धयुक्तम् ।
उच्चैरुक्तं श्रवणसुखदं कूजितं कोकिलानाम्
दर्शं दर्शं स्मरहरमनः सञ्जगामातिहर्षम् ॥ १३ ॥

शिख०—

खगानां कूजद्भिर्मुखरमिथुनैः केलिपटुभिः
मृगैः मृग्यासक्तैश्चपलगतिभिः क्रीडनपरैः ।
दिवो व्यक्तैस्तीव्रं मधुरमदनोद्दीपकरणैः
बभूवोद्यानं तत्स्मरमधुरलीलास्थलमिव ॥ १४ ॥

मालिनी—

मदनरिपुरुमायाः पार्श्वभागे च तिष्ठन्
विकसितकमलाभां चारुवक्षोरुहाक्षीम् ।
युवतिसुलभरूपां सूक्ष्मवस्त्रां शुभाङ्गीम्
सुललिततनुमेकां कन्यकां सन्ददर्श ॥ १५ ॥

---

सहसा वहाँ पर एक दिव्य उद्यान प्रकट हुआ । उस उद्यान में फूलों से लदे हुए वृक्ष बड़े ही मनोहर प्रतीत होते थे । मन्द मन्द हवा चल रही थी । सुगन्ध युक्त होने के कारण वह मन का आह्लाद बढ़ा रही थी । कानों के लिये सुमधुर स्वर में बोली हुई कोयलों की मीठी बाणी आह्लाद में चार चाँद लगा रही थी । वह सब दृश्य देखते देखते कामदेवजयी शिव बड़े ही प्रसन्न हुए ॥ १३ ॥

उद्यान के उन वृक्षों पर, काम क्रीड़ा में निपुण तथा वाचाल पक्षियों के जोड़ों द्वारा चहचहाहट हो रहा था । वृक्षों के नीचे मृगियों में आसक्त मृग जो कि अधिक चापल्य युक्त थे अपनी क्रीड़ा कर रहे थे । तथा आकाश से भी तीव्र काम वर्द्धक मधुर स्वरलहरी निनादित हो रही थी । इस प्रकार वह उद्यान मानों कामदेव का मधुर लीलास्थल ही हो रहा था ॥ १४ ॥

कामारि शिवजी ने जो पार्वती के पास ही खड़े थे ( उस प्रचुर काम विकास युक्त उद्यान में ) एक कन्या देखी । उसका वर्ण खिले हुए कमल के समान था । उसके उरोज तथा उसके नेत्र अत्यन्त आकर्षक थे । उसने अभी अभी यौवन में पदार्पण किया था । उसने एक झीनी साड़ी पहिन रखी थी ( जिसमें से ) उसके निर्दोष तथा सुललित अंग ( कुछ कुछ ) दृष्टिगोचर हो रहे थे ॥ १५ ॥

स्रग्धरा–

क्रीडन्ती कन्दुकेन स्मरकुशलकटाक्षैर्ग्रसन्ती च धैर्यं
गुह्याङ्गान्दर्शयन्ती क्वचिदपि जवतः सा भ्रमन्ती रराज ।
दूरं गत्वा क्वचित्सा पुनरपि निकटेऽयाच्च पार्श्वे स्मितास्या
पश्यन्भावीं समग्रां निखिलजनहितं त्वीश आसीत्तटस्थः ।। १६ ।।

पृथ्वी–

जहार पवनो भ्रमंश्च वसनं शुभाङ्ग्या यदा
शिवः स्वमतिचोदितः सपदि तामनुप्रागमत् ।
विमुग्धमतिमागतं भृणुतशङ्करं प्रेक्ष्य सा
अधावदतिवेगतः सपदि मोहयन्ती शिवम् ।। १७ ।।

इन्द्र०–

धावन्मृगाक्षीमनुसंयतात्मा सन्दर्शयन्स्वं स्मरमुग्धचित्तम् ।
संवर्धयन्विष्णुयशो महात्मा वीर्यं स्वकं पातयति स्म शम्भुः ।।१८।।

---

वह बाला गेंद से खेल रही थी। ( खेल के बहाने अपनी झीनी साड़ी में से ) अपने गुह्य अंगों को दिखाती हुई कभी वह ( बिल्कुल ) निकट आती थी कभी दूर जाती थी, कभी वेग से घूमती थी। वह मन्दस्मित करती हुई ( मानो पूरे संसार के ) धैर्य को खाये जा रही थी। लेकिन काम दहन शिव उसकी उस लीला को तटस्थ होकर देख रहे थे। वे, मन ही मन, क्या होनी है तथा सम्पूर्ण संसार का हित किस प्रकार होने वाला है ? यह सोच रहे थे ।। १६ ।।

हवा का एक झोंका आया और उसने उस शुभ अंगोंवाली बाला का वस्त्र हटा दिया। तब ( भावी को तथा सम्यक् प्रकार से जनहित को देखते हुये ) शिव ने स्वमति से प्रेरित होकर ( काम मोहित के समान ) उस बाला का पीछा किया। वह बाला भी विशेष रूप से मोहित बुद्धि वाले ( या मोहरहित ) शिव को आते हुये देखकर उन्हें मोहित करती हुई जोर से भागी ।। १७ ।।

परम संयतात्मा शिव ने अपने को काममोहित के समान दिखाते हुये उस मृगनयनी सुन्दरी के पीछे दौड़ते हुये ( रास्ते में ही ) अपने वीर्य का त्याग किया तथा विष्णु की यशोवृद्धि की ।। १८ ।।

वसन्त०—

तच्छुक्रतोऽभवदसौ हनुमान्स्मरारेः
योऽस्मत्कथाविषय ईश्वरचोदनायाः ।
केचिद् वदन्ति हरिणा निजमाययैव
सम्मोहितः शशिधरो न हरेः स वन्द्यः ॥ १९ ॥

शार्दू०—

कामासक्तमनास्तु चेच्छशिधरः कस्तं वदेदीश्वरम्
को वन्देत वदेच्च तं स्मरहरं देवाधिदेवं पुनः ।
तद्वीर्याद् भवितुस्त्वखण्डमतुलं यद् ब्रह्मचर्यं कथं
सत्यं लोकहितार्थमेव मधुरं प्राभूदिदं कौतुकम् ॥ २० ॥

वसन्त०—

विष्णोर्यशः सुरहितं च समीक्षमाणः
वीर्यं जहौ न गणयंश्च जनापवादम् ।
तच्छुक्रजोऽपि रघुनाथयशोऽभिवृद्धौ
स्तम्भोऽभवत्सुरहितेऽगणयन्यशः स्वम् ॥ २१ ॥

---

शिव के उसी उत्तमवीर्य से श्रीहनुमानजी का प्रादुर्भाव हुआ, जो ईश्वर की महती कृपायुक्त प्रेरणा से हमारे कथा के वर्ण्य विषय हो रहे हैं। कुछ लोग कहते हैं कि विष्णु ने अपनी माया से ही शिव को मोहित किया इसलिये विष्णु की तुलना में शिव वंद्य नहीं हैं ॥ १९ ॥

(सज्जनों) यदि शशांकशेखर भगवान् शिव काम मोहित होते तो उन्हें ईश्वर कौन कहता ? उन्हें देवाधिदेव की उपाधि कौन देता ? उन कामोहित के वीर्य से अखण्ड तथा तुलना रहित ब्रह्मचर्यवाले पुत्र ( श्री हनुमान्जी ) कैसे उत्पन्न होते ? अतः निश्चित रूप से लोक हित के लिये ही यह मधुर लीला हुई। ॥ २० ॥

देखिये, विष्णु का यश तथा देवताओं का हित दोनों को ही ध्यान में रखते हुये तथा ( उनके सामने ) अपनी अपकीर्ति का ( तनिक भी ) ध्यान न करते हुये शिवजी ने वीर्य त्यागा, उनके उसी वीर्य सम्मत श्री हनुमान् जी में ये ही तीनों गुण थे। वे रघुनाथजी के यशोवर्धन में तथा देवताओं का हित करने में स्तम्भ बने। परन्तु उन्होंने अपने यश की तरफ नहीं देखा ॥ २१ ॥

शार्दू०–

यौ सृष्टेः स्थितये लयाय च जनैराधारभूतौ स्मृतौ
लोकानां हितकाम्यया सुकृपया लीलावपुर्धारिणौ ।
श्रेष्ठः श्रेष्ठतरश्च नैव गणितौ नो स्तः पृथग्द्वावपि
तौ स्वौ दर्शयतस्तथा च मधुरं लीलामृतं वर्षतः ॥ २२ ॥

शार्दू०–

स्कन्ने रेतसि शङ्करो व्यरमदव्रीडः स्थिरः स्वात्मनि
विष्णुश्चापि तदा स्त्रियाः परिहरन् रूपं शिवं प्रावदत् ।
सर्वेभ्यस्तु दुरत्ययां सपदि मे मायामतिक्रम्य वै
शक्तो हे शिव कोऽपरः प्रभवति स्थातुं स्थिरस्त्वां विना ॥ २३ ॥

शालि०–

धन्या माया तेऽवदच्चन्द्रमौलिः मोहाच्छन्नं या करोन्मामपीति ।
ऊचे विष्णुर्मोहनः कः शिवस्य इत्युक्त्वा तौ तु जग्मतुर्वै स्वधाम्नी ॥२४॥

---

सृष्टि का पालन करने वाले विष्णु तथा संहार करने वाले शिव दोनों ही लोगों के हित की कामना से (कृपालु होकर) अवतार धारण करते हैं। उन दोनों में यह श्रेष्ठ है और यह उनसे श्रेष्ठ है। ऐसी नापतौल (ठीक) नहीं है। वे भिन्न हैं ही नहीं। वे अपने को उस प्रकार दिखाते हैं तथा जनकल्याण के लिये मधुर लीलामृत की वर्षा करते हैं ॥ २२ ॥

(हाँ तो) जब वीर्य गिर गया तब शिवजी मोहिनी के पीछे दौड़ने से विरत हुये। उनके मुखपर लज्जा के तनिक भी लक्षण नहीं दीख रहे थे (क्योंकि वह लीला) जन कल्याण के लिये ही हुई थी। तथा वे अपनी गरिमा में तथैव प्रतिष्ठित हुए। भगवान् विष्णु भी मोहिनी रूप त्याग करके (अपने पुरुष रूप में स्थित होकर) भगवान् शिव से बोले 'प्राणि मात्र के लिये दुस्तर ऐसी मेरी माया का अतिक्रमण करके शीघ्र ही अपनी महिमा में स्थित होना आपके बिना और किसके लिये शक्य है? ॥ २३ ॥

(विष्णु के यश को सुपुष्ट करते हुए) शिव बोले 'जिसने मुझको भी मोहित किया वह आपकी माया धन्य है। विष्णु बोले 'शम्भु को मोहित करने में कौन समर्थ हो सकता है?' (उस लीला के पश्चात्) इस प्रकार एक दूसरे की प्रशंसा करत हुए अन्त में वे दोनोंअपने-अपने धामों को गये ॥ २४ ॥

शिखरिणी०—

जडो वीर्यांशो यो मदनदहनस्याकथगतेः
अभूज्जन्मस्थानं रजतकनकानां सुविदितम् ।
चिदंशं वै चित्वा सुरगणहितार्थं च मरुता
ऽञ्जनायां तं क्षिप्त्वा जनकपदमाप्तं हनुमतः ॥ २५ ॥

इति श्रीहनुमच्चरित्रवाटिकायां बालकुञ्जे मोहिनी दर्शनाच्छिवस्य वीर्यपातनं तस्माच्च हनुमदुत्पत्तिकथनं नाम द्वितीयः सर्गः ॥



---

शिव के ( दिव्यातिदिव्य ) वीर्य का जो जड़ अंश था वह सुवर्ण तथा रजत की खानों के रूप में संसार के काम आया । यह ( भागवतादि ग्रन्थों से ) सुविदित है । तथा चेतन अंश जो था उसे शिवाज्ञा से ही वायु ने इकट्ठा कर दिया तथा समय पाकर उसकी अजना की कुक्षि में स्थापना करके हनुमान्‌जी का पिता होने का सम्मान प्राप्त किया ।। २५ ।।

इस प्रकार श्री हनुमच्चरित्रवाटिका में बालकुञ्जके अन्तर्गत मोहिनी दर्शन से शिव का वीर्यपात तथा उससे हनुमदुपत्तिका होना यह कथन करके दूसरा सर्ग समाप्त हुआ ।। २ ।।



# अथ तृतीयः सर्गः

शार्दू०—

का सा भाग्यघनाञ्जना गुणवती प्राभूच्च कस्यात्मजा
कस्तस्याः पतिराञ्जनेयजनकः क्वासीच्च तस्या गृहम् ।
सुश्राव्याघविनाशिनी च सुकथा तस्या जनानां कृते
यत्कुक्षेः प्रकटोऽभवत्स हनुमानस्मत्कथानायकः ॥ १ ॥

पञ्चचा०—

महेन्द्रवाटिकासु यत्र सर्वमेव सुन्दरम्
प्रभामयं स्वतेजसा मनोहरं सुशीतलम् ।
सुगन्धयुक्तमुज्ज्वलं सुकोमलं रसान्वितं
निनादितं सुमञ्जुनादतो न दुःखमण्वपि ॥ २ ॥

पञ्चचा०—

वसन्ति तत्र वै स्त्रियः शुभानना रतिप्रियाः
सुपुण्यभागिनां कृते नियोजिताश्च वज्रिणा ।

---

श्री हनुमानजी की माता होने का सौभाग्य ही जिसका (अनुपम) धन है, तथा ( उसी एक गुण से ) जो सम्पूर्ण गुणधाम बनी थी वह अंजना कौन थी ? किसकी लड़की थी ? उसके पति देव (अर्थात्) हनुमानजी का पिता कौन था ? वह कहाँ रहती थी ? हमारे चरितनायक श्री हनुमानजीने जिसकी कोख पवित्र की उस अंजना की इस विषय में एक सुन्दर कथा है जो भक्तों के लिये सुनने लायक तथा पापनाशक है ( उसे सुनिये ) ॥ १ ॥

इन्द्र के नन्दनवन की वाटिकाओं में दुःख का नाम भी नहीं है । वहाँ सभी वस्तुएँ सुन्दर हैं । अपने तपोमय प्रकाश से प्रकाशमान हैं । वे सब मन को लुभाने वाली हैं । सभी शीतल तथा कोमल स्पर्शवाली हैं । सभी से सुन्दर गन्ध निस्सृत होता है । तथा सभी रस से परिपूर्ण हैं सुमंजु स्वर से झनकार करनेवाली हैं ॥२॥

उस नन्दनवन में पुण्यवन्तों को सुख देने के लिये इन्द्र ने कुछ स्त्रियों को नियुक्त कर रखा है । वे सबकी सब सुन्दर मुखवाली तथा रतिप्रिय होती हैं । वे

मृगैः प्रसूनगुच्छकैः सजूभिराढ्यकन्दुकैः
विहाय केलिमन्यकर्म नैव कुर्वते हि ताः ॥ ३ ॥

उपजा०—

सुरेश्वराणामपि सौख्यदात्र्यः मुनीश्वराणामपि विघ्नकर्त्र्यः ।
तपोनिधीनां तपसोऽपहर्त्र्यः सर्वैर्जनैरप्सरसः स्मृता रताः ॥ ४ ॥

पञ्चचा०—

बभूव चाप्सरस्सु तासु पुञ्जिकस्थलाप्सराः
अहन्तया मदोद्धता स्वसुन्दरत्वकारणात् ।
सुचञ्चला च सा तया मुनीश्वरा विमोहिताः
जितेन्द्रियत्वभेदिकेति सा सुविश्रुताऽभवत् ॥ ५ ॥

पञ्चचा०—

मदापहारकः प्रभुर्न कस्यचित् प्रमत्तताम्
प्रपश्यति प्रवर्द्धितां निरस्यति स्वयं तु ताम् ।
अचिन्तयत्प्रभुर्मदोद्धतामिमामहं स्त्रियम्
अपेतदूषणां करोमि देवकार्यसिद्धये ॥ ६ ॥

---

स्त्रियाँ क्रीडामृगों के साथ तथा पुष्पगुच्छों के साथ तथा अपनी सखियों के साथ स्वर्ग की सुन्दर गेंदों से खेलती हैं। क्रीड़ा छोड़कर कोई भी अन्य कार्य वे नहीं करतीं हैं ॥ ३ ॥

सभी लोगों द्वारा अप्सरा कही जानेवाली उन स्त्रियों की क्रीडा में ऐसी मादकता भरी रहती है कि वे सुरेश्वरों के लिये भी सुख प्रदान करने में समर्थ होती हैं। अच्छे अच्छे मुनीश्वरों के तपस्या में विघ्न डालने वाली होती हैं तथा महान् तपोधनों की तपस्याका अपहरण करना उनके बाएँ हाथ का खेल होता है ॥ ४ ॥

स्वर्ग की उन्हीं अप्सराओं में से एक पुंजिकस्थला नाम की अप्सरा अपने समाज में अतीव सुन्दरी गिनी जाती थी। सुन्दरी तो वह थी ही महान् चंचला भी थी। उसने अनेक ऋषीश्वरों को अपने नयन कटाक्षों से ही जीत लिया था। अतः 'जितेन्द्रियत्वकी डाइन' ऐसी उसकी प्रसिद्धि हो गई थी और उसीके कारण महान् अहंकार से भरी वह ( अमर्यादित नदी की तरह ) उच्छृङ्खल हो रही थी ॥ ५ ॥

(लेकिन) मद का अपहरण करनेवाले प्रभु इस तरह किसी की प्रमत्तता बढ़ी

पञ्चचा०—

असौ दधौ महर्षिरूपमद्भुतं सुदर्शनं
जगाम तद्गृहं प्रभु बृहज्जटा कटाहवान् ।
महर्षिमागतं ददर्श साप्सरास्तदा गृहं
ननाम तं परं जहास सा मदोद्धता हृदि ॥ ७ ॥

उपजा०—

निनाय भूत्वा विनता गृहान्तः चकार तत्स्वागतमप्सराः सा ।
अर्घ्येन पाद्येन हृदा हसन्ती तथोपचारैर्बहुभिः विचित्रैः ॥ ८ ॥

उपजा०—

सेवासु सा तस्य विमोहनार्थं शृङ्गारचेष्टा अकरोद्धसन्ती ।
मुग्धोऽभवन्नैव यदा महर्षिः चकार मुग्धा पुनरेव यत्नम् ॥ ९ ॥

---

हुई नहीं देखना चाहते हैं, वे स्वयं ही उसका नाश करते हैं। उन्होंने सोचा कि इस प्रमत्ता की प्रमत्तता मैं देवकार्य की सिद्धि के लिये दूर करूँगा ॥ ६ ॥

(उस कार्य के लिये) उन्होंने महातपस्वी महर्षि का भव्य जटाजूटवाला रूप धारण किया और वे उसके स्थान पर गये। यह एक नया शिकार स्वयं ही चला आया ऐसा समझकर वह मदोन्मत्ता भीतर ही भीतर बड़ी प्रसन्नता से हँसी और (बाहर से) बड़ी भावुकता से उसने महर्षि को प्रणाम किया ॥ ७ ॥

इस प्रकार बड़ी नम्रता से वह अपने गृह में महर्षि को ले गई। तथा अर्घ्य पाद्यादि विचित्र उपचारों से उनका (विधिवत्) स्वागत तथा पूजन किया (उसकी प्रसिद्धि सुनकर बड़े बड़े महर्षि भी उससे दूर ही रहा करते थे। अतः बहुत दिन तक कोई शिकार उसे मिला नहीं था। आज वह अवसर प्राप्त हुआ जिसकी वह बहुत दिनों से बाट जोह रही थी अतः उसकी प्रसन्नता की सीमा नहीं थी ॥ ८ ॥

(अब उसने अपना जाल बिछाना शुरू किया) प्रथम सेवा करती हुई उसने अपनी शृंगार चेष्टाओं द्वारा महर्षि का मन लुभाना चाहा। परन्तु उन चेष्टाओं द्वारा महर्षि निर्विकार बने रहे। जब महर्षि को अपनी चेष्टाओं द्वारा वह विमोहित नहीं कर पाई तब वह अहंकार के कारण अमर्षशील तथा निरंकुश अप्सरा पुनः यत्न करने लगी ॥ ९ ॥

शालिनी—

कर्तुं मोहाच्छादितं तं महर्षिं यत्नं चक्रे ह्यप्सराः सा यदा तद् ।
यत्नोऽगच्छत् सर्वथा निष्फलत्वं शापाद् भीता सा मृगाक्षी चकम्पे ॥१०॥

शालिनी—

क्रोधाधिक्यं दर्शयन्स्वं महर्षिः तस्याः कल्याणेच्छुकस्तामुवाच ।
चाञ्चल्यात्त्वं वानरी चञ्चलाङ्गी भूयाः श्रुत्वा शोकमग्नाऽभवत्सा ॥११॥

पञ्चचा०—

ऋषे प्रसीद साब्रवीत् प्रणम्य तं पुनः पुनः
क्षमस्व मां कृपानिधे पितेव पुत्र्यहं तव ।
मृषा कदापि सोऽवदन्न मे गिरा भविष्यति
परं हिताय ते वरं ददामि पुञ्जिकस्थले ॥ १२ ॥

पञ्चचा०—

अवश्यमेव वानरी भविष्यसीति किन्तु ते
यदा कदा सुचारुतां यथेच्छमास्यमेष्यति ।

---

लेकिन उसके अमोघयत्न (जिन पर उसे बड़ा गर्व था) सबके सब प्रतिहत होते गये और अब वह होश में आ गई । (मैंने महर्षि का अपराध किया ऐसा उसने अनुभव किया) और वह महर्षि के अव्यर्थ शाप के डर के मारे थर-थर काँपने लगी ॥ १० ॥

अपने को क्रोध के मारे आगबबूला सा दिखाते हुए वे महर्षि बोले 'अरी दुष्टे, मुझ महर्षि के साथ भी तू अपनी चञ्चलता से बाज नहीं आई । जा, चंचलांगी वानरी ही हो जा । ऋषि की शाप वाणी सुनकर पुंजिकस्थला के शोक का पारावार न रहा ॥ ११ ॥

( इस अनपेक्षित शापवाणी के कारण बेतहाशा रोती हुई ) वह बारबार महर्षि के चरणों पर गिरी तथा अनुग्रह करने के लिये महर्षि को मनाने लगी, "हे ऋषे आप कृपा निधान हैं, महान् आत्मा है, मेरे अपराधों को क्षमा कीजिये । आप पिता के समान हैं, मैं आपकी पुत्री हूँ" उसका इस तरह गिड़गिड़ाना देखकर वे छद्मवेशधारी महर्षि बोले 'हे पुंजीकस्थले ! मेरी वाणी कभी असत्य नहीं होती है लेकिन तुम्हारे गिड़गिड़ाने से एक वर भी दे रहा हूँ ॥ १२ ॥

देखो, शापके अनुसार तुम वानरी तो अवश्य ही होओगी परन्तु मेरे वरदान से जब तुम चाहोगी यदा कदा तुम्हारा मुख मानव सुलभ सुन्दरता को भी धारण

